रक्षा—

भूकंपादनलाद्वा व्यालश्वापदबाधात्
शत्रोर्वारिविघातादापन्मोचनभारात् ।
कार्यं तक्षणकार्यं कृत्वा रक्षणमाद्यं
भूतानामिह धैर्याद्रक्षासद्गुणभाक् स्याः ॥

७ कुमारी—नजभजगैर्गुरुश्च वसुपट् कुमारी (∪∪∪∪–∪ ∪। ∪∪–∪ –) नगणजगणभगणजगणाः द्वौ गुरू । अष्टभिष्षड्भिर्यतिः ॥

सत्यम्—

मनसि सुचिन्तनं नु सुधिया यथार्थं
वचसि सुभाषणं नु सुहृदा यथार्थम् ।
कृतिषु सुकर्मकं नु करणैर्यथार्थं
त्रिकरणसत्यमेव भजसे यथार्थम् ॥

८ मंजुभाषिणी— सजसा जगौ गिति च मंजुभाषिणी । (∪∪–∪ ∪∪∪–∪ ∪–– ) सगणजगणसगणजगणाः द्वौ गुरू ॥

प्रसादः—

सफलं हितं भवति तत्प्रसादजातं
क्रियते प्रियं सुकृतशान्तमानसैर्यत् ।
तदलं सुमित्र भज भक्तिभावतस्तान्
सुजनान्परेशमिव सन्ततं प्रसन्नः ॥

९ सुकेसरम्—नरनैर्लगौ च ललितं सुकेसरम् । (∪∪∪ ∪ ∪∪∪–∪–∪ ) नगणरगणनगणरगणाः लघुः गुरुश्च ॥

समता—

द्विजनृपार्यशूद्रसकलान्त्यजेषु वा
मृगगजाऽश्वगोश्वखगकीटकेषु वा

समुदयास्तदुःखसुखभूमिषु स्थिरो
हृदि समाश्रय स्वसमतां सुकृती त्वम् ॥

१० मदनार्ता —अन्त्ये गुरुयुग्मं त्यसभाश्चेन्मदनार्ता। (— — ∪ ∪ — — ∪ ∪ — — — ∪ ∪ — — —) नगणयगणसगणभगणाः द्वौ गुरू ॥

१ आर्जवम्—

वक्रो हृदि भावो यदि न स्याच्छ्रयते त्वां
भूमार्जवभावश्शुचिभूमाविवरागः ।
मर्त्योऽखिलकार्येष्वृजुधर्माभिरतश्चे-
त्तस्य प्रियवश्या जनताऽऽस्ते गुणरक्ता ॥

२ चतुर्दशमनवः—

स्वायम्भुवनामा प्रथमोऽसौ मनुरुक्त-
स्स्वारोचिषनामौत्तमिकस्तापसनामा ।
तद्रैवतदेवो ह्यपरश्चाक्षुषदेवो
वैवस्वतनामा रविवंशादिमनुस्स्यात् ॥

३ सावर्णिरथायं परतष्षट्पदवर्ती
दक्षो मनुरेषां प्रथमो ब्रह्मसुनामा ।
धर्मोमनुरुद्रौ हितरौच्यश्चषडिन्द्रः
ख्याता मनवो ये सचतुर्भिर्दशभिस्ते ॥

११ पथ्या— सजसा यलौ च सहगेन पथ्या मता। (∪ ∪ — ∪ — ∪ ∪ ∪ — ∪ — — ∪ — —) सगणजगणसगणयगणाः लघुः गुरुश्च ॥

धीरभावः—

धनबान्धवादिविलयेऽत्र चित्ते भवं
व्यसनं निपात्य धृतधैर्यभावो यदा ।

घनमार्गतोऽधिकृतकार्यभारस्तदा
निजधीरभावगुणदीप्तिमांस्त्वं भवेः ॥

१२ प्रमदा—नजभजला गुरुश्च भवति प्रमदा। (∪∪∪∪ – ∪ – ∪∪∪ – ∪∪ – ) नगणजगणभगणजगणाः लघुः गुरुश्च ॥

पारार्थ्यम्—

तव जननं परार्थमिति भोः करुणा-
रसपरिपूरणेन हृदयेन कृती।
परहितमेव नित्यमनुगच्छसि चे-
त्त्वमथ परार्थतासुगुणमाद्रियसे ॥

१३ मध्यक्षामा—मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ। (– – – – – | ∪∪∪∪∪∪ ) मगणभगणनगणयगणाः द्वौ गुरू। चतुर्भिर्दशभिर्यतिः॥

भूतहितचिन्तनम्—

भूतग्रामं कथमपि सुखिनं कारुण्या-
द्धुर्व्यां कुर्यामिति मतिसुभगस्सर्वात्मा।
स्वार्थत्यागात्कुरु हितमचलस्सर्वेषां
भूतप्रीतिं भज भज सुगुणं धर्मात्मा ॥

१४ वासन्ती—मात्तो नो मो गौ यदिगदिता वासन्तीयम्। ( – – – – – ∪∪∪∪ – – – – – ) मगणतगणनगणमगणाः द्वौ गुरू ॥

भूतिः—

ऐश्वर्यं भूतिः परमहिता स्वातन्त्र्यात्मा
व्याहारे भावे कृतिकरणे सौख्यावाप्तौ।
आगारे देशे समरविधौ सैन्ये कोशे
तद्भूत्यायुक्तो जयसि यथा लोकेशस्त्वम् ॥

१५ अतिशक्वर्याम्—

१ लीलाखेला—एकन्यूनैः विद्युन्मालापादैः चेल्लीलाखेला। ( — — — — — — — — — — — — — — — ) मगणमगणमगणमगणमगणाः ॥

अहिंसा—

केनाप्यन्ये नीता बाधा हिंसा प्रोक्ता लोकेऽस्मिन्
नो चेन्नीता बाधा येनाऽहिंसावृत्तिस्साऽप्युक्ता।
तद्धर्मस्थे हिंसावृत्तिर्नोदित्यन्योऽन्याभावा-
त्तद्धर्मात्मा शुद्धो योऽसौ बुद्धस्तादृग्भूयास्त्वम् ॥

२ तृणकम्—तृणकं समानिकापदद्वयं विनाऽन्तिकम्। ( — ᴗ — ᴗ — ᴗ — ᴗ — ᴗ — ᴗ — ᴗ — ) रगणजगणरगणजगणरगणाः ॥

सांसारिकपरस्परधर्माः—

तत्स्वधर्मतत्त्वमुक्तमत्रसत्वरूपकं
तद्गुणाश्च ते ह्यनन्तधा स्थितास्तथापि ये।
मुख्यतां भजन्ति तेऽपि दर्शिता मतिं गता
नित्यकार्यमार्यधर्मतत्वमद्य कथ्यते ॥

३ शशिकला—द्विहतहयलघुरथ गिति शशिकला। (ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ — ) नगणनगणनगणनगणसगणाः ॥

पितृधर्मः—

सदशनवसनरुगपनयकरणं
नयविनयमुखगुणभृदधिकरणम्।
श्रुतिततिकलितहितसुमतिकरणं
स्वतनयविषयकपितृजनकरणम् ॥

४ स्रक्—स्रगिति भवति रसनवकयतिरियम्। (ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ। ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ — ) नगणनगणनगणनगणसगणाः। षड्भिर्नवभिर्यतिः ॥

पुत्रधर्मः—

स्वपितृविहितमतिहितकृतिकरणं
सरुजि पितरि सुविधिरुगपहरणम् ।
विनयसदयकृतपदपरिचरणं
पितृविषयकसुतजननिजकरणम् ॥

५ मणिगुणनिकरः—वसुहययतिरिह मणिगुणनिकरः । (᧐᧐ ᧐᧐᧐᧐᧐᧐| ᧐᧐᧐᧐᧐᧐ - ) नगणनगणनगणनगणसगणाः । अष्टाभिस्सप्तभिर्यतिः ॥

सतीधर्मः—

पतिपदरतियुतबहुपरिचरणं
तदभिमतसरणिसमुदनुसरणम् ।
प्रियकरसुमधुरसुखरसभरणं
परिणयपतिकरगतिजनकरणम् ॥

६ मालिनी—ननमयययुतेयं मालिनी भोगिलोकैः । (᧐᧐᧐ ᧐᧐᧐——|—᧐— ᧐—— ) नगणनगणमगणयगणयगणाः । अष्टभिस्सप्तभिर्यतिः ॥

पतिधर्मः—

गुणगणसमवेतां मानिनीं स्वस्य भार्यां
गृहगतजनसेवाधर्मसक्तां स्ववश्यां ।
प्रणयवचनवित्तैः पालयेत्पूर्णभावैः
पतिजनकरणीयो धर्म एष प्रशस्तः ॥

शुक्लपक्षप्रतिपदादिपञ्चदशाहानां श्रौतनामानि—

प्रतिपदि सितपक्षे नाम संज्ञानमाद्यं
सवितृहितकरे विज्ञानमह्नि द्वितीये ।

नयति मुदमुमां प्रज्ञानमस्मिन्स्तृतीये
गणपतिहितदे तज्ज्ञानदाख्यं चतुर्थे ॥
गरुडमुदभिजानत्पञ्चमाहेऽथ षष्ठे
गुहपरमहिते यत्तच्च सङ्कल्पमानम् ।
रविरथदिवसाहे कल्पमानं प्रपूर्व-
मुपपदसहितं दुर्गाष्टमे कल्पमानम् ॥
सनवममुपक्लृप्तं रामजन्मातिपूते
सविजयदशमाहे क्लृप्तमर्घ्यं सुराणाम् ।
हरिहरहितभूते श्रेय एकादशाऽहे
हरिभजनसुदीप्ते यो वशी द्वादशाहे ॥
त्र्यधिककृतदशाहे तच्छनेऽर्घ्यं यदायत्
चतुरितदशके संभूतमानन्तकेऽह्नि ।
विधुकरपरिपूर्णे पूर्णिमाहे हि भूतं
शरकलितदशाहेष्वेवमाहुस्समाख्याः ॥

७ चन्द्रलेखा—म्रौ म्यौ याद्यौ भवतां सप्ताष्टभिश्चन्द्रलेखा। ( - - ᴗ । ᴗ - - ᴗ - - ) मगणरगणमगणयगण-यगणाः । सप्तभिरष्टाभिर्यतिः ॥

राजधर्मः—

राजाराष्ट्रं समन्तात्स्निग्धान्तरङ्गः प्रजाना
माहारार्थं यथावद्वृत्तिप्रवृत्तिव्यवस्थाम् ।
विद्याऽऽरोग्यार्थयोग्यां सन्मार्गरीतिं प्रकल्प्य
प्रायो देशे विदेशे कीर्त्या स्वधर्माद्विराजेत् ॥

१६ अष्ट्याम्—

१ वृषभगतिविलसितम्—भ्नौ त्रिनगास्स्वराः खमृषभगतिः

विलसितम् (– ∪∪ – ∪ – ∪ ∪∪∪∪∪∪∪∪∪ –) भगणरगणनगणनगणनगणाः गुरुश्च । सप्तभिर्नवभिर्यतिः ॥

**प्रजाधर्मः—**

राजनि तत्प्रजाश्च कृतसदमलमनसो
राज्यसुधारणाय बहुविधनयशरणाः ।
शत्रुविपच्छमार्थमतुलधनवितरणाः
पान्ति हितं स्वधर्ममतिशयचतुरतया ॥

२ अश्वगतिः पञ्चभकारकृताऽश्वगतिर्यदिचान्तगुरुः (– ∪∪ – ∪∪ – ∪∪ – ∪∪ – ∪∪ –) भगणभगणभगणभगणभगणाः गुरुश्च॥

**गुरुधर्मः—**

शिष्यजनादरतत्परिपालनशक्तगुरु-
र्ज्ञानविबोधकशास्त्रविचारकभावगतिम् ।
सन्ततशिष्यमहोदयदायकमार्गततिं
द्रागुपदिश्य ततो निजधर्ममयं भजते ॥

३ पञ्चचामरः—लघुर्गुरुर्निरन्तरं यदा स पञ्चचामरः (∪ – ∪ – ∪ – ∪ – ∪ – ∪ – ∪ – ∪ –) जगणरगणजगणरगणजगणाः गुरुश्च ॥

**शिष्यधर्मः—**

निजं गुरुं सभक्तितस्स्वदैवतं विभावयन्
तदार्यपादसेवया तदाज्ञया तदाश्रयात् ।
तदात्तबोधबुद्धिमान्तदाशिषाप्रसिद्धिमान्
स्वशिष्यधर्ममादरात्सुशिक्षितो हि सेवते ॥

४ गुणभूषा—लघुयुग्मादधिकाद्या मदनान्ता गुणभूषा । अथवा प्रमाणिकागनप्रत्यक्षरद्विरुक्त्या षोडशाक्षरात्मकपादोपेता । अथवा द्विपञ्चाशत्तमाधिनायविंशपवृत्तस्य पादौ यस्याः पादः सा । (चतुर्थाष्टमद्वादशषोडशाक्षरेषु यतियुक्ताऽपि गुणभूषा)

अथवा सभतैर्युग्यसगैर्युग्यतितुर्या गुणभूषा । (UU——UU——UU——UU——) सगणभगणतगणयगणसगणाः गुरुश्च । विवरणम् । अष्ट्याख्यछन्दोजातेषु षट्त्रिंशदधिकपञ्चशतोत्तरपञ्चषष्टिसहस्रसंख्याकवृत्तेषु, अष्टोत्तरशताधिकत्रयोदशसहस्रतमं लघुद्वयगुरुद्वयक्रमेण षोडशाक्षरपादात्मकं वृत्तं गुणभूषाऽभिधानेनात्र व्यवह्रियते । (एतद्ग्रन्थकर्त्रा रचिता 'स्तुतिकुसुमाञ्जलिस्था गिरिजास्तुतिः' अस्मिन्नेववृत्ते निबद्धा भवति ॥

गृहस्थसामान्यधर्मः—

गृहमेधी गृहिणीयुक्प्रियपुत्रैर्धनधान्यै
श्श्रितबन्धुः पुरुषार्थान्कुलधर्मान्हितकाले ।
परिपाल्य प्रणयेन स्थिरभक्तिं गुरुवर्गे
सुचिरायुस्सुखभोगाननुभूयादिहयोग्यान् ॥

चन्द्रस्य षोडशकलाः—

२ अमृता मानदयाऽऽप्ता ह्यथ पूषा सह तुष्ट्या
सुखपुष्टिस्सह रत्या सह धृत्या मुनिसंख्याः ।
शशिनी चन्द्रिकयाप्ता सह कान्त्या दशसंख्या-
स्सह सा ज्योत्स्निकया श्रीः कलिता द्वादशसंख्याः ॥
अथ सा प्रीतिकला चाङ्गदया सा सह पूर्णाऽ
मृतयाऽऽप्ता सकलाष्षोडशसंख्या हि कलास्ताः ।
सितपक्षे क्रमवृद्धा बहुळे ह्रासमुपेता
रविधाम्नामुदयास्तैर्विधुभूमिभ्रमणात्तैः ॥

षोडशमातृकाः—

४ वरगौरीमथ पद्मां सशचीं तां भज मेधां
अथ सावित्र्यभिधानां विजयां तां च जयां ताम् ।
कृतदेवाद्यपदाऽऽप्तामिह सेनां स्वधयाऽऽप्तां
सुयुगाहां द्विपदाढ्यां श्रुणु ता मातर इत्थम् ॥

८ अथ ता लोकपदाद्या विदिता मातर एवं
श्रृणु शान्ति सह पुष्ट्या सह धृत्या सह तुष्ट्या ।
सकलाष्षोडशनाम्न्यः कुलदैवात्मकदेव्यो
बहुभाग्यं सुखमायुः कुशलं ते ददतेऽलम् ॥

५ वाणिनी—नजभजरैर्यदा भवति वाणिनी गयुक्तैः। (υ υ υ υ — υ — υ υ υ — υ — υ — —) नगणजगणभगणजगणरगणाः गुरुश्च॥

तत्त्वविद्धर्मः—

भवति यदा मनस्सुकृतधर्मतो विशुद्धं
तदनुगतायनेष्वधिगतोऽखिलार्थभारम् ।
स्वपरहितोदयाय विनियुज्य तं स्वकामान्
सुखमनुभूय भो निजसुखं भजाऽऽत्मवित्त्वम् ॥

१७ अत्यष्ट्याम्—

१ शिखरिणी—रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणी। (υ — — — — — | υ υ υ υ υ — — υ υ υ —) यगणमगणनगणसगणभगणाः लघुः गुरुश्च। षड्भिरेकादशभिर्यतिः॥

असंख्याकैर्यत्नैरपि पुरुषकारो हि विफलो
न दैवं पर्याप्तं स्वयमखिलकाम्यार्थविजये ।
स्वयत्नैर्धीरस्त्वं कुरु निजकृतिं भोः प्रतिदिनं
स्वसिद्धेर्देवांस्त्वं तनु सुमुखिनस्स्वर्पितभरः ॥

२ पृथ्वी—जसौ जसयलागवसुग्रहयतिश्च पृथ्वी गुरुः (υ — υ υ υ — υ — | υ υ υ — υ — — υ —) जगणसगणजगणसगणयगणाः लघुःगुरुश्च। अष्टभिर्नवभिर्यतिः॥

मनोरथपरायणो भज तवेष्टदेवं परं
तदन्यमतिधारणं त्यज तदा धिया तत्परः ।
स एव सुशको भवेद्घटयितुं यथेष्टान् हितान्
त्वमत्र परमात्मदृग्यदि तदा स सर्वेश्वरः ॥

३ वंशपत्रपतितम्—दिङ्मुनिवंशपत्रपतितं भरनभनलगैः ।
(– ∪ ∪ – ∪ – ∪ ∪ ∪ – | ∪ ∪ ∪ ∪ ∪ ∪ ∪ –) भगणरगणनगणभगणनगणाः लघुः गुरुश्च । दशभिस्सप्तभिर्यतिः ॥

लोकविभुर्विभूतिवशतो भवति हि शतधा
स्वीकृतरूपनामभरितो भजनकरमुदे ।
माधवरामकृष्ण इति तं बहुविधवरदं
शङ्करसांबरुद्र इति तं विदुरिह सुखदम् ॥

४ मन्दाक्रान्ता—मन्दाक्रान्ताजलधिषडगैर्म्भौ नतौ तौ गुरूचेत् । (– – – – | ∪ ∪ ∪ ∪ ∪ – | – ∪ – – ∪ – – –) मगणभगणनगणतगणतगणाः द्वौ गुरू । चतुर्भिष्षड्भिस्सप्तभिर्यतिः ॥

माधवः—

वन्दे देवं परमपुरुषं श्रीपतिं माधवं त्वां
भक्तश्रेयोऽधिगमवरदं मोक्षदं श्रेष्ठरूपम् ।
कल्याणानां परमसुनिधिं पावकं पापराशेः
कारुण्याऽऽप्तं सुरनरहितं चिन्मयं स्वात्मभूतम् ॥

५ हरिवृत्तम् (हरिणी)—रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा कथिता हरिः । (∪ ∪ ∪ ∪ ∪ – | – – – – | – ∪ – ∪ ∪ – ∪ –) नगणसगणमगणरगणसगणाः लघुः गुरुश्च । षड्भिश्चतुर्भिस्सप्तभिर्यतिः ॥

रामः—

दशरथहितं रामाकारं जगत्त्रयपालकं
गुरुयजनपं सीताकान्तं वनाश्रयरक्षकं ।
कपिपतिसखं वन्दे भक्त्या विभीषणरक्षकं
दशमुखहरं रामाहं त्वां धराऽमरपालकम् ॥

६ नर्त्कुटकम् (नर्दटकम्)—हयदशभिर्नजौ भजजला गिति नर्त्कुटकम्। (∪∪∪∪–∪–|∪∪∪–∪∪–∪∪–) नगणजगण-भगणजगणजगणाः लघुः गुरुश्च। सप्तभिर्दशभिर्यतिः॥

कृष्णः—

अरिजनभञ्जने कृतधियं यदुवंशपतिं
मुनिजनरञ्जने हितहृदं निजभक्तनिधिम्।
कुरुकुलकर्षणे स्तुतजयं विजयाद्यगतिं
मम हृदि भावये सुरनुतं विभुकृष्णमहम्॥

७ कोकिलकम—मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम्। (∪∪∪∪–∪–|∪∪∪–∪∪|–∪∪–) नगणजगणभगणजगण-जगणाः लघुः गुरुश्च। सप्तभिष्षड्भिश्चतुर्भिर्यतिः॥

शङ्करः—

भयहरशङ्करे स्थिरप्रियङ्करमुक्तिकरे
शरणमहं भजेऽसुरनरामरशक्तिधरे।
हितवरदानतो नरसुरासुरशक्तिकरे
तव चरणाम्बुजे समवलंबनमाश्चयं॥

८ चित्रलेखा—ससजा भजगा गुदिकस्वरैर्भवति चित्रलेखा। (∪∪–∪∪–∪–∪–|∪∪∪–∪–) सगणसगणजगणभगण-जगणाः द्वौ गुरू। दशभिस्सप्तभिर्यतिः॥

साम्बशिवः—

यदि साम्बशिवं भजाम्यहं सदुमया सहत्वां
किमु देवगणैर्ममेतरैस्तव सदाश्रिता ये।
भवपाशहरं भवं हरं सकलजीवपालं
सुखशान्तिकरं प्रियात्मकं निखिलभावबोधम्॥

सप्तदशतत्त्वात्मकसूक्ष्मशरीरम्.

१ सह धीन्द्रियपञ्चकैः कृतं विषयगप्रतीतौ
करणेन्द्रियपञ्चकैस्समं कृतिपरायणैर्यत् ।
असुदानिलपंचकैर्युतं मतिमनोयुतं त-
न्निजसूक्ष्मशरीरमुच्यते तदनुगोऽयमात्मा ॥

१ धृत्याम्

१ हरिचक्रमा—रात्सजौ जभरा विदुर्वसुदिग्यतिर्हरिच-
क्रमा । (–∪–∪∪–∪ |∪∪–∪ ∪∪–∪ ) रगणसगणजगणजगणभगण
रगणाः । अष्टभिर्दशभिर्यतिः ॥

१ शङ्करे त्वयि मानसं यदि सन्ततं सुविधीयते
शङ्करं न शिवङ्करं वद किं भवेदिति गीयते ।
किङ्करैस्तव यत्सुखं शिव सन्निधावनुभूयते
किङ्करे मयि तत्सुखं सुखमास्त्वित्विति प्रविभाव्यते ॥

२ हरिणप्लुतम्—म्सौ जां जौ भरसंयुता करिबाणकैर्हरि
णप्लुतम् । (–– ∪∪–∪ –|∪∪ ∪––|∪∪– ∪–) मगण
सगणजगणजगणभगणरगणाः । अष्टभिः पञ्चभिः पञ्चभिर्यतिः ॥

२ कैलासोऽमरसेवितस्तव मन्दिरं बहुसुन्दरं
लोकाम्बा गिरिजा सती तव सुन्दरी हितशंकरी ।
हेरम्बो गणनायकस्तवपुत्रकस्सुरनायकः
संसारः परमाद्भुतः कथमागतो वद देव ते ॥

अष्टादशपुराणानि—

३ ब्राह्मं भागवताग्निके सुवराहकं वरवामनं
मार्कण्डेयकनारदे वरलिङ्गकं परपाद्मकम् ।
स्कान्दं ब्रह्मविवर्तकं परमात्स्यकं वरकूर्मकं
ब्रह्माण्डं च भविष्यदित्यथ गारुडं शिववैष्णवे ॥

३ निशा । (सुधा—नाराचम्) नगणयुगलरोऽब्धिरेषा यदा

स्युर्निशा सा भवेत्। (⏑⏑⏑⏑⏑⏑–⏑––⏑––⏑––⏑ ) नगणनगणरगणरगणरगणरगणाः। दशभिरष्टभिर्यतिः॥

भवति यदि भवे रुचिस्ते विलासात्सुखार्थं विभो
भव वद सुमते न युक्ता कुतो मानवानां तथा।
प्रकृतिगुणवशाद्भवश्चेन्न शस्तस्सदा दुःखदो
गुणपरिहरणे विधिः को भवेत्त्वं मम ब्रूहि भोः॥

४ करिणी—सनजा अपि नभसा शरयतिभिर्यदि करिणी। (⏑⏑–⏑⏑|⏑⏑–⏑⏑|⏑⏑–⏑⏑|⏑⏑ ) सगणनगणजगणनगणभगणसगणाः। पञ्चभिः पञ्चभिः पञ्चभिस्त्रिभिर्यतिः॥

गिरिजा—

गिरिजे दिश घृणया मम भवसागरतरणं
भवतोऽधिककरुणा यदि मयि तेऽनघहृदये।
जलजन्तुभिरभितो भयकृशविह्वलतनये
तरणिं तव चरणं मम शरणं कुरु जननी॥

५ कुसुमितलतावेल्लिता—स्याद्भूतर्त्वश्वैः कुसुमितलता वेल्लिता म्तौ नयौ यौ। (–––––|⏑⏑⏑⏑⏑–|–⏑––⏑– ) मगणतगणनगणयगणयगणयगणाः। पञ्चभिष्षड्भिस्सप्तभिर्यतिः॥

कुमारः—

व्यर्था मे याञ्चा बत पितरि ते [1]मातरि त्वद्विभूतौ
त्वत्साम्यं यस्मान्न मम गुणतो भूरिसामर्थ्यतो वा।
तत्त्वामेवाहं शरणमुपगतस्तत्प्रियस्त्वं कुमारो
नान्यो मत्कल्पस्सुगुणरहितो लाघवात्त्यक्तसङ्गः॥

६ हरनर्तकम्—नौ जयौ भरसहितौ कविबाणाश्वैर्हरनर्तकम्। ( ⏑ ⏑⏑⏑⏑ |⏑⏑– |⏑⏑ ⏑ ) रगणनगणजगणयगणभगणरगणाः। अष्टभिः पञ्चभिः पञ्चभिर्यतिः॥

---

[1] त्वद्विभूतौ—त्वमेव विभूतिः (परमैश्वर्यं) यस्य सः तस्मिन् अथवा यस्याः सा तस्याम्। इदं 'पितरि, मातरि,' पदयोः प्रत्येकं विशेषणम्.

कार्तिकेय सुरगणे वरसैन्यपः प्रथितो बली
सप्तमातर इति ते प्रियनामतो दिश कोऽधिकः ।
तारकासुरहनने खलु दर्शितं भुजशौर्यकं
कीदृशा वयमभयं त्वयि याचितुं किमु शक्नुमः ॥

७ चित्रलेखा—मन्दाक्रान्तानलघुपग्युता कीर्तिता चित्रलेखा ( – – – | ∪ ∪ ∪ ∪ ∪ ∪ – | ∪ – ∪ – – – ) मगणभगणनगणयगण यगणयगणाः । चतुर्भिस्सप्तभिस्सप्तभिर्यतिः ॥

त्वं चेत्पित्रोरयनमनुसृतो दीनकारुण्यशून्यो
गच्छेयं भोश्शरणमनुपदि प्रेमधामानमन्यम् ।
सन्त्येवाऽन्ये सरससुहृदया रक्षणे मेऽत्र दक्षाः
प्राप्तोऽहं त्वां तुलयितुमनसा द्राक्परीक्षार्थमन्यैः

८ नन्दनम्—नजभजरैस्तुरफसंहितैर्दिशवहैर्यनन्दनम् । (∪ ∪ ∪ ∪ ∪ – ∪ ∪ ∪ | ∪ – ∪ – – ∪ – ) नगणजगणभगणजगणरगण रगणाः । एकादशाभिस्सप्तभिर्यतिः

प्रथितषडाननाांन किमु त पयस्सुपानाय वा
चतसृषु दिक्षु संसृतिगतान्सुभर्तुकामाय वा ।
अधिकदशेक्षणानि प्रकृतेस्समीक्षितुं वा श्रियं
व्यसनशतैर्हतानिह नरान्दयादृशा रक्षितुम् ॥

९. शार्दूलललितम्—मस्सौजस्सतसा दिनेशऋतुभिश्शार्दूलललितम् । ( – ∪ ∪ – – ∪ ∪ ∪ ∪ | – ∪ ∪ ∪ – ) मगणसगण जगणसगणतगणसगणाः द्वादशभिष्षड्भिर्यतिः ॥

हेरम्बः—

हेरम्ब त्वमपीह मोदकपरो नालक्षयसि मां
संरम्भादथवा तनोषि कुशलं भक्तस्य तव मे ।

आयातां बहुविघ्नसन्ततिमहं तीर्त्वाऽऽशु सुसुखी

सेवे त्वामधिकप्रियात्प्रमुदितस्तेऽनुग्रहवशात् ॥

१०. अतिधृत्याम्—

१ मेघविस्फूर्जितम्—रसर्त्वश्वैर्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जितं स्यात्। (‿ – – – – ‿ ‿ ‿ ‿ ‿ ‿ ‿ – ‿ – – ‿ – ) यगणमगणनगणसगणरगणरगणाः गुरुश्च। षड्भिष्षड्भिस्सप्तभिर्यतिः ॥

हृषीकेशं ध्यायाम्यहमभयदं लोकरक्षासुदीक्षं

हृषीकानां सम्यङ्नियमकरणे कारणं त्वामभेद्यम्।

सदा देवैरीड्यं शुभकरमतिं सान्द्रकारुण्यसिंधुं

विभो भक्तं ते मां विनयसहितं पाहि पद्माक्ष नित्यम् ॥

२ शार्दूलविक्रीडितम्—सूर्याश्वैर्मसजास्ततास्सगुरवश्शार्दूलविक्रीडितम्। (– – – ‿ ‿ – ‿ – ‿ ‿ ‿ – – – ‿ – – ‿ – ) मगणसगणजगणसगणतगणतगणाः गुरुश्च। द्वादशभिस्सप्तभिर्यतिः ॥

मातस्ते तनयं तिरस्कृतसुखं मां पाहि पद्मालये

गोविन्देन न मे भवेत्सुफलिता या काचिदाशास्थिरा।

यत्तस्याश्रयिणो भवन्ति बहवो नाहं भवेयं प्रियो

मातुः प्रीतिरिह स्थिरेति मनुजैस्सामान्यतो गृह्यते ॥

३ मणिदीप्तिः—मस्सौ नौ जयगा मणिदीप्तिर्दिङ्निधिभिर्यदिर्विच्छिन्ना। ( – – – ‿ ‿ – ‿ ‿ – ‿ ‿ ‿ ‿ – ‿ ‿ – – ) मगणसगणसगणनगणजगणयगणाः गुरुश्च। दशभिर्नवभिर्यतिः ॥

लक्ष्मीस्त्वं धनदा सुमतीनां स्या विपुलं न धनेप्सा मे

वाणि त्वं मतिदा सुकवीनां स्या विमलं न मतीच्छा मे।

गौरि त्वं शुभदा सुकृतीनां स्या बहुलं न शुभाशा मे
मातस्त्वं त्रिविधा त्रिगुणस्था तारय मां गुणशोकाब्धेः ॥

४ वाणी-- म्भौ स्नौ यस्सा गुरुसहिता निधिविरतिश्चेदिह-
वाणी । ( ‒ ‒ ‒ ∪ ∪ ∪ ∪ ‒ | ∪ ∪ ∪ ∪ ‒ ‒ ‒ ∪ ∪ ‒ ‒ ‒ ) मगणभगण-
सगणनगणयगणसगणाः गुरुश्च । नवभिर्दशभिर्यतिः ॥

पुत्रो मारः पतिरहिशो जननि गृहं सागरमध्ये
मत्तो वाहस्त्वमपि चला न मम गतिस्तेषु निराशा ।
किं तु प्राहुस्त्वयि विमला निजकरुणा पालनदक्षा
तामाश्रित्य प्रकृतिगतां समपनये तामसवृत्तिम् ॥

६ सुमधुरा—म्रौ भ्नौ मो नो गुरुश्चद्वयऋतुरसैरुक्ता सुमधुरा ।
( ‒ ‒ ‒ ‒ ∪ ‒ ‒ ‒ | ∪ ∪ ∪ ∪ ∪ ‒ | ‒ ∪ ∪ ∪ ) मगणरगणभगण-
नगणमगणनगणाः गुरुश्च । सप्तभिष्षड्भिष्षड्भिर्यतिः ॥

ब्रह्माणं त्वां भजेऽहं सकलजननाहृत्तापशशिनं
ब्रह्माण्डान्तर्वसन्तं बहिरपि तथा सर्वान्तरगतम् ।
सृष्टिव्यापारकार्ये स्थिरकृतधियं चित्राद्भुतकृतिं
वेदानां बोधगम्यं स्तुतमतिबलं तेजोऽन्तरबलम् ॥

६ सुरसा—म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराहसु-
रसाम् । ( ‒ ‒ ‒ ∪ ‒ | ∪ ∪ ∪ ∪ ∪ ∪ ‒ | ‒ ∪ ∪ ∪ ‒ ‒ ) मगणरगण-
भगणनगणयगणनगणाः गुरुश्च । सप्तभिस्सप्तभिः पञ्चभिर्यतिः ॥

लोकेश त्वां भजे त्वं मम सुखमभयं दातुमनसा
युक्तश्चेत्तन्मनो मे तव भजनपरं पादकालेतं ।
कुर्वेऽहं तेऽत्र मे भो समयमधुना लेख्यकलितं
मद्धस्ताङ्केन युक्तं त्वमपि कुरु तथा भानसालिपिम् ॥

२० कृत्याम्--

१ वृत्तम्—त्रीरजौ गलौ भवेदिहद्दशेन लक्षणेन वृत्तनाम ।

( – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ – ᴗ ) रगणजगणरगणजगणरगणजगणाः गुरुः लघुश्च ॥

वाणि मे नमोऽस्तु ते तवाशिषोऽत्र सन्तु मे सदाऽऽदरेण
पालितोऽहमस्मि ते कृपाभरादतः प्रियो यतस्सुतोऽस्मि ।
पादपाणिकर्मणा प्रदक्षिणं तवार्चनं सुविग्रहस्य
भक्तियुग्जनास्सुखं वितन्वतेऽबलस्त्वहं धिया करोमि ॥

२ सुवदना । ज्ञेया सप्ताश्वषड्भिर्मरभनयगुना भ्लौगस्सुवदना । (– – – – – ᴗ – – – | ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ – | – – ᴗ ᴗ ᴗ – ) मगणरगणभगणनगणयगणभगणाः लघुः गुरुश्च । सप्तभिस्सप्तभिष्षड्भिर्यतिः ॥

विष्णोर्वाहो गरुत्मान् वृषभपतिरुमाकान्तस्य सविधे
धातुर्हंसो भवान्या मृगपतिरधुना तान्यामि शरणम् ।
श्रान्तं मां ते नयेयुस्तदधिपतिपदं सौहार्दमनस-
स्सान्निध्याप्ताः प्रभुभ्यो हितसमाधिगमे दक्षाः परिजनाः ॥

३ गीतिका । सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका । (ᴗ ᴗ – ᴗ – ᴗ | ᴗ ᴗ – ᴗ – ᴗ ᴗ – | – ᴗ – ᴗ ᴗ – ᴗ – ) सगणजगणजगणभगणरगणसगणाः लघुः गुरुश्च । पञ्चभिस्सप्तभिरष्टभिर्यतिः ॥

हनुमान्नतो रघुनायके मम पालने खलु शक्तिमान्
यदवाग्भवं रससागरं बहुरंहसा हि पुराऽतरत् ।
तदयं मुदा भवसागरं भुवि तारयेत्सुसुखेन मां
सुपरीक्षितो विहितोद्यमे स हि शक्नुयात्सदृशोद्यमे ॥

२१ प्रकृत्याम्—

१ स्रग्धरा—म्रभ्नैर्यानां त्रयाणां त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । (– – – – ᴗ – – | ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ

मगणरगणभगणनगणयगणयगणयगणाः । सप्तभिस्सप्तभिस्सप्तभिर्यतिः ॥

देवा यूयं समेताः पदगतमनुजं रक्षितुं मां समर्थाः
प्रत्येकं वो न शक्तिर्यदि भवति सदा स्वार्थचिन्तापराणाम् ।
स्वार्थत्यागः परार्थं समुचितकरणे स्वार्थता तद्विचारे
स्वात्मार्थस्स्याद्विचारः परपदभजनात्स्वात्मभावः परार्थः ॥

२ पञ्चकावळी —(सरसी-ध्रुतश्रीः) नजभजजा जरौ नरपते कथिता भुवि पञ्चकावळी । (∪ ∪ ∪ ∪ – ∪ – । ∪ ∪ ∪ – ∪ ∪ ) नगणजगणभगणजगणजगणजगणरगणाः । सप्तभिस्सप्तभिस्सप्ताभिर्यतिः

तव शपथं न किं स्मरसि तं भगवन्यदनन्यभक्तिभा-
ग्जनकुशलं वहाम्यहमिहेति निजं सकलप्रियं प्रभो ।
त्वदपरवस्तु किं वद यदस्ति यथाऽस्ति च तत्वमेव मे
तदनु विचारये श्रुतिकथां बहुधा प्रथितां प्रपञ्चिताम् ॥

२२ आकृत्याम्

१ भद्रकम् (सुभद्रकम्)—सूत्रम् । भ्रौ न्रौ न्रौ न्गौ दिगादित्याः । भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं सुभद्रकमिदम् । (– ∪ ∪ – ∪ – ∪ ∪ ∪ – । ∪ – ∪ ∪ ∪ – ∪ – ∪ ∪ ∪ –) भगणरगणनगणरगणनगणरगणनगणाः गुरुश्च । दशभिर्द्वादशभिर्यतिः ॥

पालय मामगेन्द्रतनुजे सुरेन्द्रपददे नरेन्द्रवरदे
पादयुगे ममास्तु शरणं तवास्तु करुणा मयि स्तुतगुणा ।
भावय मामनन्यशरणं त्वदन्यवरणं न मन्य इति हा
साधय मेऽभिलाषमपरं विलासविधुरं प्रकाशमधुरम् ॥

२ हंसी—मो मो तो नो नो नो सो गो वसुभुवनयतिरिति भवति हंसी । ( – – – – – – – – । ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ – – )

मगणमगणतगणनगणनगणनगणसगणाः गुरुश्च । अष्टभिश्चतुर्दशभिर्यतिः ॥

लक्ष्मीदेवि त्वां वन्देऽहं सकलभुवनमनुजनमितपादां
  लक्ष्मीकान्तस्त्वद्वाग्वश्यो वद तमसकृदुपगतमत्र मां त्वम् ।
लक्ष्मीवासेनाऽलं तेन त्वमयि कनकमुखधनमिह दातुं
  लक्ष्मीवन्तं कर्तुं दीनं प्रभवसि कुरु मदवनमिति याचे ॥

३ मत्तेभम्—तौ भो यजौ सरनगाः पङ्क्तिसूर्ययति मत्तेभमत्र कथितम् । (— — ᴗ — ᴗ ᴗ ᴗ — — ᴗ । ᴗ ᴗ ᴗ — — ᴗ — ᴗ ᴗ ᴗ —) तगणभगणयगणजगणसगणरगणनगणाः गुरुश्च । दशभिर्द्वादशभिर्यतिः ॥

१ प्रह्लादपालनरसिंहाय भक्तपरिपोषाय ते भगवते
  दैत्यान्विनाशयितुकामाय पापपरिहाराय तापशमिने ।
देवादिदेवसुरपूज्याय भूतभरणायाऽखिलाश्रयवते
  सर्वेश्वराय परिपूर्णाय देव वनमालिन्नमोऽस्तु शतशः ॥

तदेव—सप्तभिस्सप्तभिरष्टभिर्यतिः

२ रामं भजे मनसि रामं दधे शिरसि रामं धरामि हृदये ।
  रामं स्तुवे वचसि रामं श्रये वयसि रामं करोमि सकलम् ।
रामं नमामि भुवि रामं तनोमि हृदभिरामं मुदाऽहमधुना
  रामं स्मरामि पररामं नयामि हितरामं शरीरगमिमम् ॥

४ लक्ष्मीः—नयसभयुक्ता ननसा गो दशरविकृतयतिरिह लक्ष्मीः । (ᴗ ᴗ ᴗ ᴗ — — ᴗ ᴗ — । ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ — —) नगणयगणसगणभगणनगणनगणसगणाः गुरुश्च । दशभिर्द्वादशभिर्यतिः ॥

नरहरिसेवां कुरु नित्यं शुभकरवरनवविधभक्त्या
  हरिहररूपं भज सत्यं जनिहरपरतरसुखतत्त्वम् ।

नरवर धीरं श्रृणु पथ्यं दरहरगरधरपदभक्त्या

मुरहरदेवं स्तुहि तेऽर्थ्यं धर गुरुरसभरपरमत्वम् ॥

२३ विकृत्याम्—

१ मत्ताक्रीडा । सूत्रम् मौ तौ नौ न्लौ ग्वसुपञ्चदशनः ।
मत्ताक्रीडा मौ म्लौ नौ नाविति लगिति च वसुशरदशयतिका ।
(-- --- ---|∪∪∪∪∪∪| ∪∪∪∪∪∪∪∪∪∪∪—) मगणमगणतगणनगणनगणनगणनगणाः लघुः गुरुश्च । अष्टभिः पञ्चभिर्दशभिर्यतिः । अथवा । अष्टभिः पञ्चदशभिर्यतिः ॥

१ वन्दे श्रीरामं श्रीरामं मम हृदयगतमभयहितविनयं

विश्वामित्रेड्यं सीताढ्यं पितृवचनमनुविपिनकृतवसतिम् ।

सुग्रीवाकांक्षादातारं दशवदनहरमवितदवरजं

राज्ये जानक्या संयुक्तं धरणिजनहितकरणपरवशगम् ॥

२ रामे श्यामे सीतारामे त्वमयि रमय हृदयगगनपरमे

मायातीते कायापेते सुखय विपयलयसदसदुपरमे ।

संसारेऽस्मिन्किं सारस्स्यादिति हि सुमतिविदितपरमपदधी-

स्सत्यज्ञानानन्तानन्दे विहर सततनिहतकरणविततिम् ॥

२ अद्रितनया—नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया । (∪∪∪∪ ∪—∪∪∪- |∪—∪∪∪—∪—∪∪∪—) नगणजगणभगणजगणभगणजगणभगणाः लघुः गुरुश्च । एकादशभि द्वादशभिर्यतिः ॥

भज भज देवकीवरसुतं विलासभरितं सुभोगकलितं

तव हितकारणं सुरनुतं त्रिवर्गरहितं त्रिवर्गवरदम् ।

भवकृतदुःखगान्सुखयितुं य एव सुलभस्तमेव शरणं

भज निजभक्तितो वरगुणी हिताय मतिमान्सुखाय गतिमान् ॥

३ अश्वललितम् सूत्रम् । न्जौ भ्जौ भ्जौ भ्लौ ग्रुद्रादित्याः ।
यदिह नजौ भजौ भजभलगास्तदश्वललितं हरार्कयतिमान् ।

(⏑⏑⏑⏑–⏑– ⏑⏑⏑– | ⏑–⏑⏑⏑––⏑–⏑⏑⏑ –) नगणजगणभगण जगणभगणजगणभगणाः लघुः गुरुश्च ॥ एकादशभिर्द्वादशभिर्यतिः ॥

स्वजननभूर्हिता जगति का समा न हि तया समानहितया
निजतनुजान्बलाद्द्रुतगतान्करोत्यभिमुखान्करोद्धृतसुखान् ।
कदशनतोऽपि सा प्रमुदिता दधाति मृतकं ददात्यमृतकं
सुभजत पालिनीं स्वजननीं निजां सुकृतिनो निजांशकृतिनः॥

२४ संकृत्याम्—

१ तन्वी । सूत्रम्—भ्तौ न्सौ भौ न्यौ द्विगादित्याः । भूतमुनीनैर्यतिरिह भतनास्स्भौ भनयाश्च यदि भवति तन्वी । (–⏑⏑–– |⏑⏑⏑⏑⏑⏑ | ⏑⏑ ⏑⏑⏑⏑⏑⏑ –) भगणतगणनगणसगणभगणभगणनगणयगणाः । पञ्चभिस्सप्तभिर्द्वादशभिर्यतिः ॥

रक्षितसीतं भज भज मनसा तारकपालकसुरनरनाथ
कोसलनाथं दशरथतनुजं लक्ष्मणभूषितनिजपदलाभम् ।
वायुजसेव्यं रविसुतसुहृदं धर्मसुरक्षकभरतबलाढ्यम्
पालितधर्मं मुनिजनसुखदं धीरविभीषणसुकृतशरण्यम् ॥

२ अश्वललितम्—यदिह नजौ भसौ जसजसकास्तदश्वललितं स्वरेशरसाभित् । (⏑⏑⏑⏑ ⏑ | ⏑⏑⏑⏑–⏑ –⏑⏑⏑ –| ⏑–⏑⏑⏑–) नगणजगणभगणसगणजगणसगणजगणसगणाः । सप्तभिरेकादशभिष्षड्भिर्यतिः ॥

यदुकुलपालके कुरुकुलदावपावकसखे त्रिलोकातिलके
विनिहतकंसके सुविहितपाण्डुनन्दनसुखे प्रभावशिशुके ।
अगणितदैत्यके विगणितलोकशोकगणके सुखप्रकृतिके
शुभगुणधारके त्रिगुणविधायकेऽतिभवुके मनो लगतु मे ॥

२५ अभिकृत्याम्—

१ क्रौञ्चपदम्—सूत्रम्—भ्तौ भ्रौ नौ नौ ग्भूतान्द्रियवस्वृषयः।
क्रौञ्चपदा भ्तौ भरौ ननना नगाविषु शरवसुमुनियतिरिह भवेत्।
( - ∪ ∪ - - | ∪ - - ∪ ∪ | ∪ - - ∪ ∪ ∪ ∪ ∪ ∪ | ∪ ∪ ∪ ∪ ∪ ∪ ) भगण-
नगणभगणरगणनगणनगणनगणलगणाः गुरुश्च। पञ्चभिः पञ्चभि-
रष्टाभिस्सप्तभिर्यतिः॥

साम्बशिवं त्वं पूजय नित्यं भवहरभयहरसुखकरानिलयं
सर्वगतं त्वं सर्वमयं तं स्थिरचरगतिकृतिरतिभृतिकरणम्।
कारणमाद्यं कार्यवशाद्यं विदुरिह चतुरधिचतुरसमतनुं
सच्चिदनन्ताऽऽनन्दसुमूर्तिं भज सुखमनुभव निजहितमतुलम्॥

२६ उत्कृत्याम्—

१ भुजङ्गविजृंभितम्—सूत्रम्। मौ तौ नौ सौ ल्गौवसुरुद्र-
ऋषयः। वस्वीशाश्वश्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृं-
भितम्। ( - - - - - - - - | ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ ∪ - | ∪ - - ∪ ∪ -
∪ - ) मगणमगणतगणनगणनगणनगणरगणसगणाः लघुः गुरुश्च।
अष्टभिरेकादशभिस्सप्तभिर्यतिः॥

देव्यां भक्तिस्सिद्धा चेन्मे करतलगतमिह भवुकं स्वजन्म-
फलोदयं
भक्तिश्रद्धायुक्ता प्रीतिः कृतमतिमलततिविलयाद्भवेत्सुकृतो-
दयात्।
प्रीतिस्तादृग्जायेतास्यां यदि शुचिमतिपरवशता ह्यनन्य-
शरण्यता
लब्ध्वा तां त्वं तत्कारुण्यादतिशयशमयसुपदं भजार्य
सुखास्पदम्॥

२ अपवाहकः—सूत्रम्। म्नौ नौ नौ न्सौ गौ नवकर्तुरसे-
न्द्रियाणि। मो नाष्टसगागिति यदि नवरसरसशरयतियुतः

मपवाहाख्यम्।( ‒ ‒ ‒ ‒ ∪∪∪∪∪∪|∪∪∪∪∪∪|∪∪∪∪∪∪|∪∪
‒ ‒) मगणनगणनगणनगणनगणनगणनगणसगणाः द्वौगुरू।
नवभिष्षड्भिष्षड्भिः पञ्चभिर्यतिः॥

वन्देहं सकलजननि जननमरणजलधितरणसुधुरीणां त्वां
सन्देहान्विविधजननविषयकमतिसुदृढकलितउपदान्हन्याः।
सन्दोहं विजितमनसि फलिततपसि विलसदमृतसुखधाराणाम्
वन्दारौ मयि तव पदकमलमधुरमधुमधुलिहि कलयाम्ब त्वम्॥

३ शम्भुनटनम्—जसौ नभजसा नभलगा मनुदिवाकरय-
तिर्यदि तु शम्भुनटनम्। (∪ ‒ ∪∪∪ ‒ ∪∪∪ ‒ ∪∪∪ ‒ ‒ | ∪∪∪ ‒ ‒ ∪∪∪ ‒ ‒ ∪∪∪ ‒) जगणसगणनगणभगणजगणसगणनगणभगणाः
लघुः गुरुश्च। चतुर्दशभिर्द्वादशभिर्यतिः॥

नमोस्तु वशिने धृतशिरोर्ध्वशशिने लसदुमाकलितवर्ष्मबलिने
सविष्णुविधिनन्दिमुनिनारदसुराऽऽहतसुवाद्यनुतगीतरुचिरे।
अनेकविधनृत्तयुतताण्डवमहे गिरिजया सह सुलास्ययुतया
त्रिलोकपरनाटकगृहे त्वमनिशं प्रथमसूत्रणधरो विजयसे॥

अज्ञानादत्र ये दोषा जाताः प्रमादतो भ्रमात्।
विद्वांसस्तान् समीकुर्युरित्यहं प्रार्थये बुधान्॥

समाप्तोऽयंग्रन्थः

ओं म न त्स त्.

भाववत्सरमाघमाससितपञ्चमीभृगुवासरे (28–2–1935) कल्याणपुर्यां
(बेङ्गळूरुनगरे) चन्नरायपत्तनाभिजनेन श्रीवेङ्कटरमणार्येण वाग्देवी-
सेवार्थं रचितोऽयं ग्रन्थः सम्पूर्णस्समुल्लसति॥

# प्रथमोऽनुबन्धः

## प्रस्तारक्रियानिष्पत्त्या वृत्तसंख्यानिर्णयः

संविधानक्रमः—यस्मिन् कस्मिन् छन्दसि यावन्त्यक्षराणि भवेयुः, प्रथमतिर्यक्श्रेण्यां तावतश्चतुष्कोणान् निर्माय, तेषु सर्वेषु गुरुचिह्नानि लेख्यानि। द्वितीयतिर्यक्श्रेण्यां तावत्स्वेव चतुष्कोणेषु मध्ये, पूर्वश्रेणीगतप्रथमगुरोरधस्स्थचतुष्कोणे लघु-चिह्नं न्यस्येत। तस्य वामपार्श्वगतचतुष्कोणेषु (लेखकस्य दक्षिणपार्श्वभूतेषु), तत्पूर्वश्रेणीस्थसर्वचतुष्कोणगतगुरुलघु-चिह्नानि यथावन्निवेश्यानि। तृतीयतिर्यक्श्रेण्यामपि एवमेव। परन्तु, तत्र तद्दक्षिणपार्श्वगतचतुष्कोणेषु सर्वत्र गुरुचिह्नान्येव निवेशनीयानि। चतुर्थादितिर्यक्श्रेणीगतचतुष्कोणेष्वपि एतत्क्रम-मेवानुसृत्य, यथोचितगुरुलघुचिह्नानि लेख्यानि। यस्यां तिर्यक्-श्रेण्यां सर्वेषु चतुष्कोणेषु लघुचिह्नान्येव निक्षिप्तानि भवन्ति, तत्रैव प्रस्तारविरामो भवति। ततः, तत्प्रस्तारश्रेणी संख्याः कियत्य इति गणयित्वा, तत्रोदितानां वृत्तानामपि तावत्यस्संख्याः इति निर्णेतव्यम्॥

यथा—

### २ उक्तायाम्—एकाक्षरः पादः.

| | | | |
|---|---|---|---|
| १ गुरुः | .... | — | १ श्रीवृत्तं-प्रसिद्धं |
| २ लघुः | ... | ᴗ | २ कल्पनीयम् |

इति द्वेवृत्ते निष्पद्येते॥

सूचना-अत्र ऊर्ध्वाकारायां आद्यन्तिमात्मिकश्रेण्यां स्थितयोः चतुष्कोणयोः एकैकगुरुलघुक्रम इति विवेकः॥

### २ अत्युक्तायां द्व्यक्षरः पादः.

| | | | | |
|---|---|---|---|---|
| १ गुरू | .... | — | — | १ स्त्रीवृत्तं-प्रसिद्धं |
| २ लघुगुरू | .... | ∪ | — | २ कल्पनीयम् |
| ३ गुरुलघू | .... | — | ∪ | ३ ,, |
| ४ लघू | .... | ∪ | ∪ | ४ ,, |

इति चत्वारि वृत्तानि निष्पद्यन्ते ॥

सूचना अत्र ऊर्ध्वाकारायां आद्यश्रेण्यां स्थितेषु चतुष्कोणेषु यावत्पूरं पूर्वप्रस्तारवत् एकैकगुरुलघुक्रमः । ऊर्ध्वाकारायां अन्तिम श्रेण्यां स्थितेषु चतुष्कोणेषु द्विर्द्विर्गुरुलघु क्रम इति विवेकः ॥

### ३ मध्यमायाम् त्र्यक्षरः पादः.

| | | | | | |
|---|---|---|---|---|---|
| १ मगणः | ... | | - | - | १ नारीवृत्तं-प्रसिद्धं |
| २ यगणः | .... | ∪ | — | — | २ कल्पनीयम् |
| ३ रगणः | .... | — | ∪ | — | ३ मृगीवृत्तं प्रसिद्धं |
| ४ सगणः | .... | ∪ | ∪ | — | ४ कल्पनीयम् |
| ५ तगणः | .... | — | — | ∪ | ५ ,, |
| ६ जगणः | .... | ∪ | | ∪ | ६ ,, |
| ७ भगणः | .... | — | ∪ | ∪ | ७ ,, |
| ८ नगणः | .... | ∪ | ∪ | ∪ | ८ ,, |

इति अष्टौ वृत्तानि निष्पद्यन्ते ॥

सूचना—अत्र ऊर्ध्वाकाराद्यद्वयश्रेणीगतचतुष्कोणेषु यावत्पूरं पूर्ववत् क्रमेण एकैकाद्विर्द्विर्गुरुलघुक्रमः । ऊर्ध्वाकारन्तिमश्रेणीगत चतुष्कोणेषु चतुश्चतुर्गुरुलघुक्रम इति विवेकः ॥

## ४ प्रतिष्ठायां चतुरक्षरः पादः.

| | | | | | |
|---|---|---|---|---|---|
| १ मगणोगुरुश्च | — | — | — | — | १कन्यावृत्तंप्रसिद्धं |
| २ यगणः .... | ∪ | — | — | | २ कल्पनीयम् |
| ३ रगणः .... | — | ∪ | — | — | ३ ,, |
| ४ सगणः .... | ∪ | ∪ | — | — | ४ ,, |
| ५ तगणः .... | — | — | ∪ | — | ५ ,, |
| ६ जगणः .... | ∪ | — | ∪ | — | ६ ,, |
| ७ भगणः .... | — | ∪ | ∪ | — | ७ ,, |
| ८ नगणः .... | ∪ | ∪ | ∪ | — | ८ ,, |
| ९ मगणोलघुश्च | — | | — | ∪ | ९ ,, |
| १० य ,, .... | ∪ | — | — | ∪ | १० ,, |
| ११ र ,, .... | — | ∪ | — | ∪ | ११ ,, |
| १२ स ,, .... | ∪ | ∪ | — | ∪ | १२ ,, |
| १३ त ,, .... | — | | ∪ | ∪ | १३ ,, |
| १४ ज ,, .... | ∪ | — | ∪ | ∪ | १४ ,, |
| १५ भ ,, .... | — | ∪ | ∪ | ∪ | १५ ,, |
| १६ न ,, .... | ∪ | ∪ | ∪ | ∪ | १६ ,, |

इति षोडशवृत्तानि निष्पद्यन्ते ॥

सूचना—अत्र ऊर्ध्वाकाराऽऽद्यत्रयश्रेणीगतचतुष्कोणेषु यावत्पूरं पूर्ववत् क्रमेण, एकैकद्विर्द्विश्चतुश्चतुर्गुरुलघुक्रमः । ऊर्ध्वाकारान्तिमश्रेणीगतचतुष्कोणेषु अष्टाष्टगुरुलघुक्रम इति विवेकः ॥

## ४ सुप्रतिष्ठायां—पञ्चाक्षरः पादः.

| | | | | | | |
|---|---|---|---|---|---|---|
| १ मगणो गुरू च | — | — | — | — | — | १ कल्पनीयम् |
| २ य ,, .... | ∪ | — | — | — | — | २ ,, |
| ३ र ,, .... | — | ∪ | — | — | — | ३ ,, |
| ४ स ,, .... | ∪ | ∪ | — | — | — | ४ ,, |
| ५ त ,, .... | — | — | ∪ | — | — | ५ ,, |
| ६ ज ,, .... | ∪ | — | ∪ | — | — | ६ ,, |
| ७ भ ,, .... | — | ∪ | ∪ | — | — | ७ पङ्क्तिः |
| ८ न ,, .... | ∪ | ∪ | ∪ | — | — | ८ कल्पनीयम् |
| ९ मगणोलघुगुरू च | — | — | — | ∪ | — | ९ ,, |
| १० य ,, .... | ∪ | — | — | ∪ | — | १० ,, |
| ११ र ,, .... | — | ∪ | — | ∪ | — | ११ ,, |
| १२ स ,, .... | ∪ | ∪ | — | ∪ | — | १२ ,, |
| १३ त ,, .... | — | — | ∪ | ∪ | — | १३ ,, |
| १४ ज ,, .... | ∪ | — | ∪ | ∪ | — | १४ ,, |
| १५ भ ,, .... | — | ∪ | ∪ | ∪ | — | १५ ,, |
| १६ न ,, ... | ∪ | ∪ | ∪ | ∪ | — | १६ ,, |
| १७ मगणोगुरुलघू च | — | — | — | — | ∪ | १७ ,, |
| १८ य ,, .... | ∪ | — | — | — | ∪ | १८ ,, |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १९ | रगणोगुरुलघू च | | – | ∪ | – | – | ∪ | १९ | कल्पनीयम् |
| २० | स | „ .... | ∪ | ∪ | – | | ∪ | २० | „ |
| २१ | त | „ .... | – | – | ∪ | – | ∪ | २१ | „ |
| २२ | ज | „ .... | ∪ | – | ∪ | – | ∪ | २२ | „ |
| २३ | भ | „ .... | – | ∪ | ∪ | – | ∪ | २३ | „ |
| २४ | न | „ .... | ∪ | ∪ | ∪ | – | ∪ | २४ | „ |
| २५ | मगणोलघू च.... | | – | – | – | ∪ | ∪ | २५ | „ |
| २६ | य | „ .... | ∪ | – | – | ∪ | ∪ | २६ | „ |
| २७ | र | „ .... | – | ∪ | – | ∪ | ∪ | २७ | „ |
| २८ | स | „ .... | ∪ | ∪ | – | ∪ | ∪ | २८ | „ |
| २९ | त | „ .... | – | – | ∪ | ∪ | ∪ | २९ | „ |
| ३० | ज | „ .... | ∪ | – | ∪ | ∪ | ∪ | ३० | „ |
| ३१ | भ | „ .... | – | ∪ | ∪ | ∪ | ∪ | ३१ | „ |
| ३२ | न | „ .... | ∪ | ∪ | ∪ | ∪ | ∪ | ३२ | „ |

इति द्वात्रिंशद्वृत्तानि निष्पद्यन्ते ॥

सूचना—अत्र ऊर्ध्वाकाराऽऽद्यचतुष्टयश्रेणीगतचतुष्कोणेषु यावत्पूरं पूर्ववत्क्रमेण, एकैकाद्विर्द्विश्चतुश्चतुरष्टाष्टगुरुलघुक्रमः । ऊर्ध्वाकारान्तिमश्रेणीगतचतुष्कोणेषु, षोडशषोडशगुरुलघुक्रमइति विवेकः ॥

## गायत्र्यां षडक्षरः पादः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ मगणमगणौ | — | — | — | — | — | — | १ विद्युल्लेखा |
| २ य ,, .... | ∪ | — | — | — | — | — | २ कल्पनीयम् |
| ३ र ,, .... | — | ∪ | — | — | — | — | ३ ,, |
| ४ स ,, .... | ∪ | ∪ | — | — | — | — | ४ ,, |
| ५ त ,, .... | — | — | ∪ | — | — | — | ५ ,, |
| ६ ज ,, .... | ∪ | — | ∪ | — | — | — | ६ ,, |
| ७ भ ,, .... | — | ∪ | ∪ | | | — | ७ ,, |
| ८ न ,, .... | ∪ | ∪ | ∪ | — | — | — | ८ ,, |
| ९ मगणयगणौ | — | — | — | ∪ | — | — | ९ ,, |
| १० य ,, .... | ∪ | — | — | ∪ | — | — | १० सोमराजी |
| ११ र ,, .... | — | ∪ | — | ∪ | | — | ११ कल्पनीयम् |
| १२ स ,, .... | ∪ | ∪ | — | ∪ | — | — | १२ ,, |
| १३ त ,, .... | — | — | ∪ | ∪ | — | — | १३ तनुमध्या |
| १४ ज ,, .... | ∪ | — | ∪ | ∪ | — | | १४ कल्पनीयम् |
| १५ भ ,, .... | — | ∪ | ∪ | ∪ | — | — | १५ ,, |
| १६ न ,, .... | ∪ | ∪ | ∪ | ∪ | — | — | १६ शशिवदना |
| १७ मगणरगणौ | — | — | — | — | ∪ | — | १७ कल्पनीयम् |
| १८ य ,, .... | ∪ | — | — | — | ∪ | — | १८ ,, |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १९ रगणरगणौ | – | ∪ | – | – | ∪ | – | १९ कल्पनीयम् |
| २० स ,, .... | ∪ | ∪ | – | – | ∪ | – | २० ,, |
| २१ त ,, .... | – | – | ∪ | – | ∪ | – | २१ ,, |
| २२ ज ,, .... | ∪ | – | ∪ | – | ∪ | – | २२ ,, |
| २३ भ ,, .... | – | ∪ | ∪ | – | ∪ | – | २३ ,, |
| २४ न ,, .... | ∪ | ∪ | ∪ | – | ∪ | – | २४ ,, |
| २५ मगणसगणौ | – | – | – | ∪ | ∪ | – | २५ ,, |
| २६ य ,, .... | ∪ | – | – | ∪ | ∪ | – | २६ ,, |
| २७ र ,, .... | – | ∪ | – | ∪ | ∪ | – | २७ ,, |
| २८ स ,, .... | ∪ | ∪ | – | ∪ | ∪ | – | २८ ,, |
| २९ त ,, .... | – | – | ∪ | ∪ | ∪ | – | २९ वसुमती |
| ३० ज ,, .... | ∪ | – | ∪ | ∪ | ∪ | – | ३० कल्पनीयम् |
| ३१ भ ,, .... | – | ∪ | ∪ | ∪ | ∪ | – | ३१ ,, |
| ३२ न ,, ... | ∪ | ∪ | ∪ | ∪ | ∪ | – | ३२ ,, |

## गायत्र्यां षडक्षरः पादः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ३३ मगणतगणौ | — | — | — | — | — | ∪ | ३३ कल्पनीयम् |
| ३४ य ,, .... | ∪ | — | — | — | — | ∪ | ३४ ,, |
| ३५ र ,, .... | — | ∪ | — | — | — | ∪ | ३५ ,, |
| ३६ स ,, .... | ∪ | ∪ | — | — | — | ∪ | ३६ ,, |
| ३७ त ,, .... | — | — | ∪ | — | — | ∪ | ३७ ,, |
| ३८ ज ,, .... | ∪ | — | ∪ | — | — | ∪ | ३८ ,, |
| ३९ भ ,, .... | — | ∪ | ∪ | — | — | ∪ | ३९ ,, |
| ४० न ,, .... | ∪ | ∪ | ∪ | — | — | ∪ | ४० ,, |
| ४१ मगणजगणौ | — | — | — | ∪ | — | ∪ | ४१ ,, |
| ४२ य ,, .... | ∪ | — | — | ∪ | — | ∪ | ४२ ,, |
| ४३ र ,, .... | — | ∪ | — | ∪ | — | ∪ | ४३ ,, |
| ४४ स ,, .... | ∪ | ∪ | — | ∪ | — | ∪ | ४४ ,, |
| ४५ त ,, .... | — | — | ∪ | ∪ | — | ∪ | ४५ ,, |
| ४६ ज ,, .... | ∪ | — | ∪ | ∪ | — | ∪ | ४६ ,, |
| ४७ भ ,, .... | — | ∪ | ∪ | ∪ | — | ∪ | ४७ ,, |
| ४८ न ,, .... | ∪ | ∪ | ∪ | ∪ | — | ∪ | ४८ ,, |
| ४९ मगणभगणौ | — | — | — | — | ∪ | ∪ | ४९ ,, |
| ५० य ,, .... | ∪ | — | — | | ∪ | ∪ | ५० ,, |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ५१ रगणभगणौ | — | ∪ | — | — | ∪ | ∪ | ५१ कल्पनीयम् |
| ५२ स ,, .... | ∪ | ∪ | — | — | ∪ | ∪ | ५२ ,, |
| ५३ त ,, .... | — | — | ∪ | — | ∪ | ∪ | ५३ ,, |
| ५४ ज ,, .... | ∪ | — | ∪ | | ∪ | ∪ | ५४ ,, |
| ५५ भ ,, .... | — | ∪ | ∪ | — | ∪ | ∪ | ५५ ,, |
| ५६ न ,, .... | ∪ | ∪ | ∪ | — | ∪ | ∪ | ५६ ,, |
| ५७ मगणनगणौ | — | — | — | ∪ | ∪ | ∪ | ५७ ,, |
| ५८ य ,, .... | ∪ | — | — | ∪ | ∪ | ∪ | ५८ ,, |
| ५९ र ,, .... | — | ∪ | — | ∪ | ∪ | ∪ | ५९ ,, |
| ६० स ,, .... | ∪ | ∪ | — | ∪ | ∪ | ∪ | ६० ,, |
| ६१ त ,, .... | — | — | ∪ | ∪ | ∪ | ∪ | ६१ ,, |
| ६२ ज ,, .... | ∪ | — | ∪ | ∪ | ∪ | ∪ | ६२ ,, |
| ६३ भ ,, .... | — | ∪ | ∪ | ∪ | ∪ | ∪ | ६३ ,, |
| ६४ न ,, .... | ∪ | ∪ | ∪ | ∪ | ∪ | ∪ | ६४ ,, |

इति चतुष्षष्टिवृत्तानि निष्पद्यन्ते ॥

सूचना—अत्र ऊर्ध्वाकाराऽऽद्यपञ्चश्रेणीगतचतुष्कोणेषु यावत्पूरं पूर्ववत् क्रमेण, एकैकद्विद्विश्चतुश्चतुरष्टाष्टषोडशषोडशगुरुलघुक्रमः । ऊर्ध्वाकारान्तिमश्रेणीगतचतुष्कोणेषु द्वात्रिंशद्द्वात्रिंशद्गुरुलघुक्रम इति विवेकः ॥

एवं प्रस्तारनिष्पादनक्रमः दिङ्मात्रं सूचितः । शेषास्त्वतिसूक्ष्मबुद्धिगोचराः भवन्तीति सर्वं शिवम् ॥

# द्वितीयोऽनुबन्धः

## गणितविधानेन वृत्तसंख्यानिर्णयः.

| छन्दस्संख्या | गणिततन्त्रम् | गुणनक्रमः | फलितवृत्तसंख्या | गुण्यसंख्या-[सूचकम् |
|---|---|---|---|---|
| १ | $(२)^{१}$ | १×२ | २ | अ |
| २ | $(२)^{२}$ | अ×२ | ४ | आ |
| ३ | $(२)^{३}$ | आ×२ | ८ | इ |
| ४ | $(२)^{४}$ | इ×२ | १६ | ई |
| ५ | $(२)^{५}$ | ई×२ | ३२ | उ |
| ६ | $(२)^{६}$ | उ×२ | ६४ | ऊ |
| ७ | $(२)^{७}$ | ऊ×२ | १२८ | ऋ |
| ८ | $(२)^{८}$ | ऋ×२ | २५६ | ॠ |
| ९ | $(२)^{९}$ | ॠ×२ | ५१२ | ऌ |
| १० | $(२)^{१०}$ | ऌ×२ | १,०२४ | ॡ |
| ११ | $(२)^{११}$ | ॡ×२ | २,०४८ | ए |
| १२ | $(२)^{१२}$ | ए×२ | ४,०९६ | ऐ |
| १३ | $(२)^{१३}$ | ऐ×२ | ८,१९२ | ओ |
| १४ | $(२)^{१४}$ | ओ×२ | १६,३८४ | औ |
| १५ | $(२)^{१५}$ | औ×२ | ३२,७६८ | अं |
| १६ | $(२)^{१६}$ | अं×२ | ६५,५३६ | अः |
| १७ | $(२)^{१७}$ | अः×२ | १,३१,०७२ | क |
| १८ | $(२)^{१८}$ | क×२ | २,६२,१४४ | ग |

| छन्दस्संख्या | गणिततन्त्रम् | गुणनक्रमः | फलितवृत्तसंख्या | गुण्यसंख्या |
| --- | --- | --- | --- | --- |
| १९ | $(२)^{१९}$ | ग × २ | ५,२४,२८८ | च |
| २० | $(२)^{२०}$ | च × २ | १०,४८,५७६ | ज |
| २१ | $(२)^{२१}$ | ज × २ | २०,९७,१५२ | ट |
| २२ | $(२)^{२२}$ | ट × २ | ४१,९४,३०४ | ड |
| २३ | $(२)^{२३}$ | ड × २ | ८३,८८,६०८ | त |
| २४ | $(२)^{२४}$ | त × २ | १,६७,७७,२१६ | द |
| २५ | $(२)^{२५}$ | द × २ | ३,३५,५४,४३२ | प |
| २६ | $(२)^{२६}$ | प × २ | ६,७१,०८,८६४ | ब |

संकलिताः अकारादिबकारान्ताः

| | | | | |
| --- | --- | --- | --- | --- |
| २६ | $(२)^{२६}$ | | १३,४२,१७,७२६ | |

सूचना—सार्धत्रयोदशकोटिप्रायिकसंख्याकेषु वृत्तेषु सत्सु, सार्धशतप्रायिकवृत्तान्येव प्रसिद्धानि, शेषभूतानि, अप्रसिद्धानीति, अस्मद्दौभार्ग्यमेतत् आधुनिकार्याणां प्रतिभासंकोचं घोषयति । तन्निवारणाय प्रतिभाशालिभिः नवनवानि वृत्तानि कल्पनीयानि, ग्रन्थेषु प्रयोक्तव्यानि च ॥

## तृतीयोऽनुबन्धः

### वृत्तसंख्यया नष्टवृत्तस्वरूपनिर्धारः

यस्मिन् कस्मिन् वा छन्दसि जातानां वृत्तानां संख्यासु, या काचित् संख्या यदि निर्दिष्टा, तत्संख्याङ्कं द्वाभ्यां विभक्तुं शक्यते चेत्, तदा तद्वृत्तपादस्य प्रथमाक्षरम् लघुरिति उन्नेयम्। तथा विभक्तुं न शक्यते चेत्, तस्याङ्कस्य एकं संकलय्य विभज्यते, एवं सति प्रथमाक्षरम् गुरुरिति उन्नेयम्। एवं विभागे योऽङ्को लभ्यते. तमपि पूर्वक्रमानुसारेण विभज्य. द्वितीयाक्षरम् लघुर्वा गुरुर्वा भवतीति निर्धारितव्यं। तृतीयचतुर्थाक्षरादिनिर्धारेऽपि, अयमेव नियमोऽनुसर्तव्यः। एतदुक्तं भवति–निर्दिष्टाङ्को वा पुनः पुनः अर्धार्धविभागेन लब्धाङ्को वा, द्वौ-चत्वारि-षट्-अष्टेत्यादि समाङ्को यदा भवति, तदा, वृत्तस्याक्षराणि लघूनि, अन्यथा स, एकः-त्रयः-पञ्च-सप्तेत्यादि विषमाङ्कः यदा भवति, तदा तानि गुरूणि। एकमादाय अर्धीकरणं गुरोर्ज्ञापकं, एकमनादायैव अर्धीकरणं लघोर्ज्ञापकमिति विवेकः। यथा–प्रतिष्ठाच्छन्दसि जातानां षोडशवृत्तानां मध्ये. पञ्चदशतमवृत्तस्य स्वरूपविवक्षायां, गणितनक्रमेवं भवति। निर्दिष्टवृत्तसंख्याङ्कः १५ विषमाङ्को भवति। अयं एकमनादाय अर्धीकर्तुं न शक्यः। अतः, तस्मिन् एकेन संकलय्य अर्धीकृते १५+१=१६÷२=८ इति समाङ्को लब्धः। तस्मात् प्रथमाक्षरं गुरुर्भवति (–)। अयं लब्धाङ्कः एकमनादाय ८÷२=४ इति अर्धीकर्तुं शक्यः। तस्मात् द्वितीयाक्षरं, लघुर्भवति (᳘)। अयं लब्धाङ्कः पुनः एकमनादाय, ४÷२=२ इति अर्धीकर्तुं शक्यः। तस्मात् तृतीयाक्षरमपि लघुः (᳘)। अयमपि लब्धाङ्कः एकमनादायैव, २÷२=१ इति अर्धीकर्तुं शक्यः। तस्मात् चतुर्थाक्षरमपि लघुः (᳘)। एवं, – ᳘ ᳘ ᳘ इति भगणो लघुश्चेति पञ्चदशतमवृत्तपादस्वरूपं निर्धार्यते॥

तथा तस्मिन्नेव छन्दसि, प्रथमषोडशतमवृत्तयोः स्वरूपे एवं भवतः—

(१) १+१=२÷२=१ प्रथमाक्षरम् (–)
(२) १+१=२÷२=१ द्वितीयाक्षरम् (–)
(३) १+१=२÷२=१ तृतीयाक्षरम् (–)
(४) १+१=२÷२=१ चतुर्थाक्षरम् (–)

**एवं सर्वगुरुः (– – – –) अथवा मगणो गुरुश्च पादो भवति॥**

तथा (१) १६÷२=८ प्रथमाक्षरम् (υ)
(२) ८÷२=४ द्वितीयाक्षरम् (υ)
(३) ४÷२=२ तृतीयाक्षरम् (υ)
(४) २÷२=१ चतुर्थाक्षरम् (υ)

एवं सर्व लघुः (υ υ υ υ) अथवा नगणो लघुश्च पादः। तस्मिन्नेव छन्दसि चतुर्थाष्टमद्वादशतमवृत्तस्वरूपाणि यथा—

| I | II |
|---|---|
| ४÷२=२ (υ) | ८÷२=४ (υ) |
| २÷२=१ (υ) | ४÷२=२ (υ) |
| १+१=२÷२=१ (–) | २÷२=१ (υ) |
| १+१=२÷२=१ (–) | १+१=२÷२=१ (–) |
| एवं υ υ – – सगणो गुरुश्च। | एवं υ υ υ – नगणो गुरुश्च। |

III १२÷२=६ (υ)
६÷२=३ (υ)
३+१=४÷२=२ (–)
२÷२=१ (υ)

एवं υ υ – υ सगणो लघुश्च।

सर्वत्र प्रथमेऽनुबन्धे निर्दिष्टे प्रतिष्ठाच्छन्दःप्रस्तारे परीक्षां कृत्वा समाधातव्यं। एवमन्यत्र॥

# चतुर्थोऽनुबन्धः

## उद्दिष्टवृत्तस्वरूपज्ञानेन तद्वृत्तसंख्यानिर्णयः

यस्मिन् कस्मिन् छन्दसि यस्य कस्य वा वृत्तस्य पादे विद्यमाने गुरुलघुस्वरूपे ज्ञाते, तच्छन्दसि जातानां वृत्तानां संख्यासु मध्ये, तद्वृत्तं कतममिति निर्णयार्थ्यदं लघुतन्त्रम् । प्रथमं तावत् वृत्तपादाक्षराणि सुविशदं विलिख्य, तेषामधः क्रमेण गुरुलघ्वात्मकप्रस्तारं विरचय्य, तेषामधस्तनेषु स्थानेषु क्रमशः एकाङ्कमारभ्य पूर्वपूर्वाङ्कद्विगुणितानङ्कान् यावदक्षरान्तं विलिखेत् । तत्क्रमस्तु— एकाङ्कचिह्नं (१) प्रथमाक्षरस्याधः, तद्द्विगुणिताङ्कं द्व (२) द्वितीयाक्षरस्याधः, तद्द्विगुणिताङ्कं चत्वारि (४) तृतीयाक्षरस्याधः, तद्द्विगुणिताङ्कमष्टौ (८) चतुर्थाक्षरस्याधः, तत्परतोऽपि एवमेव तत्तदक्षरस्याधः समुचितानङ्कान्निवेशयेत् । ततः तत्र पादे यावन्तो लघवो विद्यन्ते तेषामधस्स्थापितान् सर्वान् अङ्कान् संकलय्य एकमधिकं संयोजयेत् । एवंकृते, या संख्या लभ्यते, सैवोद्दिष्टवृत्तस्य संख्येति निर्णीयते । यथा—प्रतिष्ठाच्छन्दसि षोडशवृत्तानि भवन्ति । तेषु, उद्दिष्टवृत्तं 'श्रीशं भज' इति ॥

| | | | | |
|---|---|---|---|---|
| १ अत्र अक्षराणि— | श्री | शं | भ | ज |
| प्रस्तारः | – | – | ∪ | – |
| पूर्वोक्तक्रमेण अङ्केषु | १ | २ | ४ | ८ |

इति निक्षिप्तेषु सत्सु, लघ्वक्षराधस्स्थसंख्या ४ चत्वारीति ज्ञायते । अधिकया एकसंख्यया संयोजिता सा (५) पञ्च भवति । अतः उद्दिष्टवृत्तं पञ्चमं भवति ॥

२ तथा, गायत्री छन्दसि चतुष्षष्टिवृत्तानि भवन्ति । तेषु

| | | | | | |
|---|---|---|---|---|---|
| 'नमस्ते गुरवे' | | | | | |
| ∪ | – | – | ∪ | ∪ | – |
| १ | २ | ४ | ८ | १६ | ३२ |

इत्यत्र सर्वलघुसंख्यासङ्कलनाङ्कः, १+८+१६=२५ । अधिकमेकेन संयोजिताङ्कः २५+१=२६ भवति । अतः, इदं वृत्तं षड्विंशतितमं भवति ॥

३ अष्ट्याख्यषोडशाक्षरच्छन्दसि, अनेन ग्रंथकर्त्रा नवीन-

तया परिभावितं स्वकीये स्तुतिकुसुमाञ्जल्याख्यग्रन्थे प्रयुक्तं गुणभूषाख्यवृत्तं, अस्मिन् संदर्भे नष्टोद्दिष्टतन्त्राभ्यां परीक्ष्य दृढीक्रियते तद्यथा—वृत्तम् ॥

गिरिजेऽलं सुरजालं भजते त्वाऽ सुरजालम् ।

ᴗ ᴗ — — ᴗ ᴗ — — ᴗ ᴗ — — ᴗ
१, २, ४, ८, १६, ३२, ६४, १२८, २५६, ५१२, १०२४, २०४८, ४०९६,

ᴗ — —
८१९२, १६३८४, ३२७६८

सङ्कलितास्सर्वे लघ्वङ्काः १३,१०७ एकेन संयोजितोऽयं १३१०७+१=१३,१०८ भवति । अनेन तन्त्रेण इदं गुणभूषावृत्तं तच्छन्दसि १३,१०८ तमं भवतीति ज्ञायते ॥

इदानीमिदं वृत्तं तन्त्रान्तरेण परीक्ष्यते । यथा—वृत्तसंख्या १३,१०८ इति पूर्वतन्त्रेण ज्ञातम् । इयमत्र निर्दिष्टा संख्या । वृत्तस्वरूपमनया निर्धार्यते ॥

(१) इयं समसंख्या, एकमधिकमनादायैव १३,१०८÷२=६५५४ इति अर्धीकर्तुं शक्यते, अतः वृत्तपादस्य प्रथमाक्षरं लघुः (ᴗ) ॥

(२) पुनः ६,५५४÷२=३,२७७ इति द्वितीयाक्षरमपि लघुः (ᴗ)॥

(३) इयं संख्या ३,२७७ विषमाङ्कान्तत्वात् एकमधिकं आदायैव ३२७७+१=३२७८÷२=१६३९ इति अर्धीकर्तुं शक्या, अतः तृतीयाक्षरं गुरुः (—) तथा (४) १६३९+१=१६४०÷२=८२० इति चतुर्थाक्षरमपि गुरुः (—) । तथा (५) ८२०÷२=४१० लघुः (ᴗ) (६) ४१०÷२=२०५ लघुः (ᴗ) । (७) २०५+१=२०६÷२=१०३ (—) (८) १०३+१=१०४÷२=५२ (—) । (९) ५२÷२=२६ (ᴗ) । (१०) २६÷२=१३ (ᴗ) । (११) १३+१=१४÷२=७ (—) । (१२) ७+१=८÷२=४ (—) । (१३) ४÷२=२ (ᴗ) । (१४) २÷२=१ (ᴗ) । (१५) १+१=२÷२=१ (—) । (१६) १+१=२÷२=१ (—) । एवं ᴗᴗ—— ᴗᴗ——ᴗᴗ—— ᴗᴗ—— इति वृत्तस्वरूपं ज्ञातं । एवं अन्योन्यतन्त्रपरीक्षया अग्र्यं एतादृशं वृत्तमस्तीति दृढीकृतम् । तस्य नाम गुणभूषेति कविना सुविचार्य कृतं भवति ॥

# पञ्चमोऽनुबन्धः.

## यतिविचारः.

पिङ्गलसूत्रम्—(६-१) 'यतिर्विच्छेदः' विच्छिद्यते विरम्यते पदपाठोऽस्मिन्निति विच्छेदः । यतिशब्दस्याधिकरणव्युत्पत्त्या, समुद्राद्यनवच्छिन्नपदाक्षरेषु यतिः कर्तव्येत्ययमर्थस्सिध्यति। तत्रैषा यत्युपदेशोपनिषद्भवति। (उपनिषत्पौर्वाचार्यपारंपर्यसिद्धो नियमः)

| यतिविषयकप्रमाणवचनानि | कविप्रयोगाः |
|---|---|
| १ यतिस्सर्वत्र पादान्ते | "विशुद्धज्ञानदेहाय" |
| २ श्लोकार्धे तु विशेषतः । | "नमस्यामि सदोद्भूतमन्थनीकृतमन्मथम् ।" |
| ३ समुद्रादिपदान्ते च | "यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु" |
| ४ व्यक्ताव्यक्तविभक्तके ॥ | "वशीकृतजगत्कालं कण्ठे कालं नमाम्यहम् । महाकालं कलाशेषशशिलेखाशिखामणिम् ॥" |
| ५ क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥ | "पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टपीततरांशौ" |
| पादान्तेऽस्य निषेधः । | (प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वहेतुम् । इत्यत्र) |

| यतिविषयकप्रमाणवचनानि | कविप्रयोगाः |
|---|---|
| तथा पूर्वापरयोर्भागयोरेकाक्षरत्वं। | (एतस्या गण्डतलमनुदिनं गाहते चन्द्रकक्षां। इत्यत्र) |
| ६ पूर्वान्तवत्स्वरसन्धौ | "स्यादस्थानोपगतयमुनासंगमेध्याभिरामं। तथा—"दिक्कालाद्यनवच्छिन्नाऽनन्ताचिन्मात्रमूर्तये।" |
| ७ क्वचिदेव परादिवत्। अस्यार्थः—येयं पूर्वापरयोरेकादेशः स्वरसन्धौ विधीयते क्वचित्पूर्वस्यान्तवद्भवति क्वचित्परस्यादिवत्। तथा च पाणिनिः—"अन्तादिवच्च"। | "स्कन्धो विन्ध्याद्रिबुध्या निकषति महिषस्याहितोऽस्तं प्रयास्यन्"। तथा—"शूलं शूलं तु गाढं प्रहर हर हृषीकेशकेशोपवक्रश्चक्रेणाकारि किं ते"—अत्र स्वररूपस्य परादिवद्भावे व्यंजनमपि तद्भक्तत्वात् तदादिवद्भवति॥ |
| ८ द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्। | "वितनघनतुषारक्षोदशुभ्रांशुपूर्णास्वविरलपदमालां श्यामलामुल्लिखन्त" इत्यादि॥ |
| ९ नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्। (तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः) पूर्वपदान्तवद्भावो मा भूत्। | "स्वादु स्वच्छं सलिलमपि च प्रीतये कस्य न स्यात्" "मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकामाः" |
| १० परेण नित्यसंबन्धाः प्रादयश्च परादिवत्। तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः। | "दुःखं मे प्रक्षिपति हृदयं दुस्सहस्तद्वियोगः" |

| यतिविषयकप्रमाणवचनानि | कविप्रयोगाः |
|---|---|
| कर्मप्रवचनेभ्यः परापि यथा स्यात् । | "प्रियं प्रति स्फुरत्पादे मन्दायन्ते न खल्विति । श्रेयांसि बहुविघ्नानि भवन्ति महतामपि" ॥ |

---

## कविकल्पलतायां

३ 'यतिभंगो नामधातुभागभेदाद्यथाभवेत्' एवञ्च पादान्ते धातुप्रातिपदिकयोरेकदेशं गत्वा तदुत्तरपादादौ शिष्टाक्षरसंनिवेशाद्यतिभंगो भवेदित्यर्थः । स्वरसन्धौ तु न । यथा—'श्रीशोऽस्तुभूत्यै भवतं' 'देवदेवजगन्नाथाऽभिवन्दे त्वां सनातनं' इत्यत्र च यतिभङ्गः न भवति। एकस्वरोपसर्गलक्षणत्वात्। स्वप्रकृत्यन्वयित्वेन, शाब्दबोधविषयत्वमेव श्रूयमाणविभक्तित्वं ॥

४ तत्रैव—एकाक्षरोपसर्गेन विच्छेदः श्रुतिसौख्यहृत् । यथा यथोद्वेगः सुधियां नोपजायते, तथा तथा मधुरतानिमित्तं यतिरिष्यते ॥

पदमध्येतु एकाक्षरस्यापि पूर्वान्तवद्भावो न यतिभङ्गकरः । यथा—जम्भारातीभकुम्भोदुत्यादौ। तथा चादीनामपि परादिवद्भावश्च । यथा—चाननानां चतुर्णामित्यत्र ॥

५ यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते । सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया । छन्दोमञ्जर्याम् ॥

६ यतिर्विच्छेदसंज्ञिका (इति केदारपण्डितः) विच्छेदः पदच्छेद इति संज्ञा यस्यास्सा ॥

७ श्लोकेषु नियमस्थानं पदच्छेदं यतिंविदुः। (इति दण्डी) ॥

८ धातुनाम्नामभेदेन विरामो विरतिर्यतिः । स्वरसन्ध्याप्तसौन्दर्यात्तद्भेदपीष्यते क्वचित् । (इति पिंगलमुनिः ॥

# शुद्धाऽशुद्धपत्रिका.

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| v | 16 | विद्यालय संस्कृत | विद्यालयसंस्कृत |
| xiii | 15 | तृर्णकम् | तृणकम् |
| xiv | 8 | (निशा | निशा ( |
| xvii | 3 | सा | सा |
| xviii | 13 | ( ) | (ʋ) |
| xix | 6 | कंचेति | कं चेति |
| 4 | 16 | ५ | ७ |
| 5 | 3 | भरध्वाज | भरद्वाज |
| ,, | ,, | वसिष्ठौ | वसिष्ठौ |
| ,, | 19 | ७ | ८ |
| ,, | 25 | धर्यः | धुर्यः |
| 7 | 20 | ध्रूवो | ध्रुवो |
| ,, | 24 | ध्रूव | ध्रुव |
| 11 | 7 | सदा गति | सदागति |
| ,, | 11 | मावि | माऽऽवि |
| 12 | 24 | वास्य | वाऽस्य |
| 13 | 16 | शताश्रय | शताऽऽश्रय |
| 14 | 3 | दाषः | दोषः |
| ,, | 14 | वि॰श्वंकर्माऽ | वि३श्वं कर्माऽ |
| 15 | 2 | प्रभयात्तम् | प्रभयाऽऽत्तम् |
| 19 | 13 | पजातिः | उपजातिः |
| 20 | 3 | प्रकाशादि | प्रकाशाऽऽदि |
| ,, | 4 | सदान्त | सदाऽन्त |
| 24 | 2 | सत्यानृत | सत्याऽनृत |
| 27 | 15 | वशा | वशा |
| 30 | 12 | ९ | १ |
| ,, | 22 | परमात्मा | परमाऽऽत्मा |
| ,, | 25 | परात्मनि | पराऽऽत्मनि |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 31 | 4 | करुणाभय | करुणाऽभय |
| ,, | 5 | समतार्जव | समताऽऽर्जव |
| 32 | 24 | नृपार्थ | नृपाऽर्थ |
| 34 | 3 | (υ υ υ υ . . | (υ υ υ υ – υ |
| 37 | 6 | दुर्गाष्टमे | दुर्गाऽष्टमे |
| ,, | 19 | प्रजाना | प्रजाना- |
| 39 | 6 | कत्रा | कर्त्री |
| ,, | 18 | | ३ |
| ,, | 25 | देवाद्य | देवाऽऽद्य |
| 40 | 1 | पदाद्य | पदाऽऽद्य |
| ,, | 3 | दैवात्म | दैवाऽऽत्म |
| ,, | 17 | काम्यार्थ | काम्याऽर्थ |
| 42 | 7 | विजयाद्य | विजयाऽऽद्य |
| ,, | 14 | नरामर | नराऽमर |
| ,, | 21 | सहत्वां | सह त्वां |
| ,, | 24 | प्रियात्म | प्रियाऽऽत्म |
| 44 | 27 | पद्याः | पद्याः |
| 46 | 4 | विष्फूर्जितम् | विस्फूर्जितम् |
| ,, | 5 | विष्फूर्जितम् | विस्फूर्जितम् |
| 48 | 14 | सान्निध्याप्ताः | सान्निध्याऽऽप्ताः |
| 51 | 11 | सुग्रीवाकांक्षा | सुग्रीवाऽऽकांक्षा |
| ,, | 14 | मायातीते | मायाऽतीते |
| ,, | ,, | कायापेते | कायाऽपेते |
| ,, | 16 | सत्यज्ञानानन्तानन्दे | सत्यज्ञानाऽनन्ताऽऽनन्दे |
| ,, | 18 | न . . ण | नगण |
| 53 | 21 | जायतास्यां | जायताऽस्यां |
| ,, | 23 | शमय | शममय |
| 54 | 20 | पु ां | पुर्यां |
| 55 | 14 | श्रेणी संख्या | श्रेणीसंख्या |